# चम्पूरामायणे

# बालकाण्डम्

०१ – २३.१०.२०१७

पीठिका, ग्रन्थपरिचयः, मङ्गलश्लोकः

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# काव्यम्

## दृश्यम्

रूपकम् १०

उपरूपकम् १८

- नाटकम्
- प्रकरणम्
- ....

- नाटिका
- सट्टकम्
- ....

## श्रव्यम्

गद्यम्

पद्यम्

चम्पूः

- कथा
- आख्यायिका

- महाकाव्यम्
- खण्डकाव्यम्
- मुक्तकम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# चम्पूकाव्यम्

- ‘गद्य-पद्यमयं काव्यं चम्पूरित्यभिधीयते’
- ‘गद्यानुबन्ध-रसमिश्रित-पद्यसूक्तिः हृद्या हि वाद्यकलया कलितेव गीतिः’
- पद्यभागे वृत्तबन्ध-माधुर्य-प्रसादादयो गुणाः, गद्यभागे ओजः-प्रास-समासभूयस्त्वादयश्च गुणाः

# चम्पूकाव्यानामितिहासः

- वेदाः, उपनिषदः ।
- महाभारतम्, भागवतम्, पुराणानि ।
- नलचम्पूः – त्रिविक्रमभट्टः (९/१० शतकम्)
- यशस्तिलकचम्पूः – सोमेश्वरसूरिः (९/१० शतकम्)
- चम्पूरामायणम् – भोजराजः (११ शतकम्)

# चम्पूकाव्यानामितिहासः

- भारतचम्पूः – अनन्तभट्टः (११ शतकम्)
- उदयसुन्दरीकथा – सोड्ढलः (११ शतकम्)
- विश्वगुणादर्शचम्पूः – वेङ्कटाध्वरिः (१७ शतकम्)
- नीलकण्ठविजयचम्पूः – नीलकण्ठदीक्षितः (१७ शतकम्)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# भोजराजः

- मालवदेशस्य महाराजः
- १०१० – १०५५ तस्य प्रशासनकाल इति अभिप्रयन्ति
- स्वयं कविः, कवीनां पोषकश्च
- भोजेन ८४ कृतयः विरचिता इति व्याख्याकाराः वदन्ति

# भोजस्य प्रमुखाः कृतयः

- शृङ्गारप्रकाशः – अलङ्कारशास्त्रग्रन्थः
- सरस्वतीकण्ठाभरणम् – व्याकरणशास्त्रग्रन्थः
- चम्पूरामायणम् – काव्यम्
- राजमार्तण्डः – पातञ्जलयोगसूत्रभाष्यम्
- राजमृगाङ्ककरणम् - रसायनशास्त्रग्रन्थः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# भोजस्य प्रमुखाः कृतयः

- नाममालिका – कोशः
- शालिहोत्रम् – अश्वशास्त्रग्रन्थः
- शृङ्गारमञ्जरीकथा – गद्यकाव्यम्
- तत्त्वप्रकाशः – शैवसिद्धान्तग्रन्थः
- व्यवहारमञ्जरी – धर्मशास्त्रग्रन्थः
- समराङ्गणसूत्रधारः - शिल्पशास्त्रग्रन्थः

# चम्पूरामायणम्

- रामायणाधारितं चम्पूकाव्यम् ।
- बाल-अयोध्या-अरण्य-किष्किन्धा-सुन्दरकाण्डानि भोजप्रणीतानि ।
- अपूर्णः ग्रन्थः । षष्ठं युद्धकाण्डं लक्ष्मणसूरिविरचितम् उपलभ्यते ।
- जनप्रियं काव्यम् – विशिष्य बालकाण्डं सुन्दरकाण्डञ्च ।
- बालकाण्डम् – ११७ श्लोकाः, गद्यभागश्च

लक्ष्मीं तनोतु नितरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥१॥

- मङ्गलश्लोकः ।
- ‘आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्’ ।
- आशीर्वादरूपं मङ्गलम् ।
- ‘लक्ष्मीः’ इति प्रथमं पदमपि मङ्गलद्योतकम् ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

लक्ष्मीं तनोतु नितरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥१॥

- पदच्छेदः
- लक्ष्मीम्, तनोतु, नितराम्, इतर-अनपेक्षम्, अङ्घ्रि-द्वयम्, निगम-शाखि-शिखा-प्रवालम्, हैरम्बम्, अम्बुरुह-डम्बर-चौर्य-निघ्नम्, विघ्नाद्रि-भेद-शतधार-धुरन्धरम्, नः

लक्ष्मीं तनोतु नितरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥१॥

- तनोतु = विस्तारयतु, सम्पादयतु ।
- किम्? लक्ष्मीम् = अभिलषितार्थसम्पत्तिम् ।
- कथम्? नितराम् = अतिशयेन ।
- कस्य? नः = अस्माकम् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

लक्ष्मीं तनोतु नितरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥१॥

- नः नितरां लक्ष्मीं तनोतु । कः?
- हैरम्बम् अङ्घ्रिद्वयम् = गणेशस्य पादयुगलम्
- कीदृशम्? इतर-अनपेक्षम्, निगम-शाखि-शिखा-प्रवालम्, अम्बुरुह-डम्बर-चौर्य-निघ्नम्, विघ्न-अद्रि-भेद-शतधार-धुरन्धरम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

लक्ष्मीं तनोतु नितरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥१॥

- अविद्यमाना अपेक्षा यस्य तद् अनपेक्षम्, इतरस्य अनपेक्षम् । भजनीयान्तरनिरपेक्षम् ।
- निगमाः = वेदाः, ते एव शाखिनः = वृक्षाः, तेषां शिखा = उपनिषदः, तासां प्रवालम् = नवपल्लवम् । वेदान्तवेद्यम् ।

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

लक्ष्मीं तनोतु नितरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥१॥

- अम्बुनि रोहति इत्यम्बुरुहं = कमलम्, तस्य डम्बरः = सौभाग्यम्/सौन्दर्यम्, तस्य चौर्यम् = अपहरणम्, तस्मिन् निघ्नम् = आयत्तम् । कमलसौभाग्यापहारि, तत्सदृशं सुन्दरम् ।
- विघ्नाः = प्रत्यूहाः, त एव अद्रयः = पर्वताः, तेषाः भेदः = विदारणम्, तस्य शतधार-धुरन्धरम् = श्रेष्ठवज्रोपमम् । अशेषविघ्नविनाशकम् ।

लक्ष्मीं तनोतु नितरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥१॥

- अन्वयः – इतरानपेक्षं निगमशाखिशिखाप्रवालम् अम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं हैरम्बम् अङ्घ्रिद्वयं नः नितरां लक्ष्मीं तनोतु ।
- तनोतु – 'तनु विस्तारे' (८-उभय), आशीरर्थे लोट् लकारः ('आशिषि लिङ्लोटौ' ३.३.१७३), प्रथमः.१

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

लक्ष्मीं तनोतु नितरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥१॥

- आशीरलङ्कारः – 'आशीर्नामाभिलषितवस्तुनः शासनं मतम्' ।
- शब्दालङ्कारः वृत्त्यनुप्रासः – 'एकद्विप्रभृतीनां तु व्यञ्जनानां यदा भवेत् ।
  आवृत्तिर्यत्र सन्दर्भे वृत्त्यनुप्रास इष्यते' ।
- वसन्ततिलकावृत्तम् – 'उक्ता वसन्ततिलका तभजा जगौ गः'






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in